# भूमिका ।

—:o:—

विदितमस्तु सर्वेषां महात्मनाम् । मीमांसापारदृश्वश्रीलौगाक्षिभास्करविरचितो मीमांसार्थसङ्ग्रहनामा प्रकरणग्रन्थः पूर्वमनेकवारं नानाप्रदेशेषु व्याख्यासनाथस्तद्रहितश्च मुद्रयित्वा प्रकाशितः, परमद्ययावत् शुद्धस्याऽऽदर्शपुस्तकस्याऽलाभाद्वा शोधकानां दृष्टिदोषाद्वा बहुषु स्थलेषु सञ्जाताभिरशुद्धिभिरध्येतॄणां पठनादिकार्येषु नैव सोत्साहं प्रवृत्तिरभूदित्यालोच्य न्यूनतामेतां परिहर्तुं बद्धोत्साहेन प्राचीनग्रन्थप्रकाशनधृतव्रतेन श्रीमता स्वर्गतश्रीहरिदासगुप्तात्मजेन जयकृष्णदासगुप्तेन भूयः प्रोत्साहितोऽहं प्राचीनया श्रीमत्परमहंसपरिव्राजकाचार्यश्रीरामेश्वरशिवयोगिभिक्षुविरचितया मीमांसार्थसङ्ग्रहकौमुद्याख्यव्याख्यया सह ग्रन्थमेनं सम्यक् संशोध्य मुद्रापयितुं प्रवृत्तः श्रीमतां महामहोपाध्यायविरुदाङ्कितानां कलिकातास्थराजकीयसंस्कृतविद्यालये दर्शनशास्त्राध्यापकानां गुरुवरश्रीमल्लक्ष्मणशास्त्रिमहाशयानां साहाय्यमवाप्यान्तरा विषमस्थले टिप्पण्यादिभिरलङ्कृत्य श्रीमद्भग-

वतः कृपाकटाक्षविशेषेण मुद्रणकार्यं कथञ्चित् समापितवानस्मि । अत्र च प्रयत्नविशेषेण शोधने कृतेऽपि यदि नैसर्गिकदृष्टिदोषादन्येन वा कारणेन स्खलितानि भवेयुस्तर्हि तानि विहाय गुणैकदृष्टयो विद्वांसो गुणानेव ग्रहीष्यन्ति नितरामिति निभृतमाशासे । प्रार्थये च भगवन्तं यदनेन व्यापारेण प्रीयतामिति ।

श्रीविशुद्धानन्दसरस्वतीविद्यालयाध्यापकः

संवत् १९७२
ज्येष्ठकृष्णैकादशी ।
कलकत्ता ।

प० श्रीरघुवीरत्रिवेदी ।
काव्यवेदान्ततीर्थः ।

# ॥ भूमिका ॥

यद्यपि भूयांसि दर्शनानि न्यायवैशेषिकप्रभृतीनि पठनपाठनयोर्वर्त्तन्ते परं सकलदर्शनेषु मीमांसादर्शनमेवाग्र्यमासनमधिष्ठातुमर्हति नहि मीमांसाशास्त्रपरिशीलनलब्धन्यायसहस्रपरिज्ञानं विना कश्चिदपि सङ्ख्यावान् वाक्यतात्पर्यं निरूपयितुं प्रभवतीति न परोक्षं प्रेक्षावताम्। व्याकरणशास्त्रं केवलं प्रकृतिप्रत्ययविभागकल्पनया साधुत्वासाधुत्वविवेकप्रदर्शनपूर्वकं पदतत्त्वनिरूपणैदम्पर्यविशिष्टमेवावलोक्यते न पुनर्वाक्यतात्पर्यनिरूपणशैलीं काञ्चिदपि प्रतिपादयति, अन्यद्धि पदतात्पर्यमन्यच्च वाक्यतात्पर्यं यथा एकमेव वाक्यं प्रकरणादिभेदेन बहुविधार्थप्रतिपत्तिमादधत् श्रूयमाणं श्रोतु र्न निर्विचिकित्सार्थप्रतिपत्त्यै समर्थं भवति न यावत् पूर्वोत्तरपरामर्शोपपत्तिप्रभृतिभिस्तात्पर्यं तस्य निर्णीतं भवति, लोकेपि धर्माधिकरणेषु इदानीमपि एकैकस्य न्यायवाक्यस्य व्यवहाराजीविनः स्वस्वपक्षानुसारेण बहुविधानर्थानुद्भावयन्ति। धर्मशास्त्रादिनिबन्धेषु तु महानेव संमर्दोलक्ष्यते। एवं प्रायः सर्वत्रैव विरुद्धानां वाक्यानां सन्निपाते कतरोऽर्थः समीचीनः कतरोऽर्थोऽसमीचीनोऽसत्यइति निर्णये कर्तव्ये इतराणि दर्शनानि विहाय मीमांसादर्शनमेव शरणीकरणीयं, किं बहुना साम्प्रतं सकलपुरुषार्थसाधनप्रकाशनपरान् वेदानधिकृत्य के वा बुद्धिमन्तः कान् वाऽऽक्षेपान्नोद्भावयन्ति तांश्च सर्वानाक्षेपानम्यहं शृण्वन्त आस्तिकवरेण्या अपि वेदेषु वीतश्रद्धा इव संलक्ष्यन्ते एवं विधाया दुरवस्थायाः प्रधानकारणमेतदेव यन्मीमांसाशास्त्रापरि-

ज्ञानं, नह्येतेषामाक्षेपाणां निरासोऽनधिगतमीमांसाशास्त्रेण कर्तुं शक्यते इति सर्वतो विशिष्यते मीमांसाशास्त्रम्। यद्यपि न्यायवैशेषिकादिशास्त्रेषु विचारप्रणाली विविधा प्रदर्शिता तथापि न वाक्यतात्पर्यनिरूपणशैली प्रविवेचिता। श्रीमता भगवता व्यासेन वेदान्तमीमांसायां वेदान्तवाक्यानां तात्पर्यं निरूपयितुं अनेके न्यायाः परिदर्शितास्तथापि सूक्ष्मधिया तेषां विचारणायां पूर्वमीमांसासमुद्भावितन्यायापेक्षया सर्वथा विलक्षणास्ते न निरीक्ष्यन्ते प्रत्युत पूर्वतन्त्रसिद्धानेव न्यायाननूद्य तत्रानुक्तं किञ्चिदेवोपदिश्यते यथा तृतीयाध्यायस्य तृतीयपादावलोकने कृतेऽसंशयं ज्ञास्यते एतद्यत्पूर्वमीमांसाया एव सर्वात्मनाऽतिदेशः कृतः न तु नूतनं किञ्चित्तत्त्वमुद्भावितमिति, यथाकथञ्चित्प्रकारभेदस्य तत्र सत्त्वेऽपि उपजीव्यभूता पूर्वमीमांसैवेत्यत्र नास्ति कस्यचिद्विप्रतिपत्तिः। स्पष्टं चेदं पूर्वमीमांसान्यायेन वेदान्तानामर्थवादत्वेन विधिवाक्यैकवाक्यत्वप्रसक्तौ तन्माभूदिति तत्तुसमन्वयादित्यादिसूत्रजातेन पूर्वमीमांसास्थमर्थवादानां विध्येकवाक्यत्वन्यायं पुरुषार्थाऽनुपयोग्युपाख्यानादिविषयतया सङ्कोच्य वेदान्तानां स्वातन्त्र्येण ब्रह्मणि प्रामाण्यं प्रदर्शितमिति सर्वथा वाक्यतात्पर्यनिरूपणे कर्तव्ये मीमांसाशास्त्रार्थतत्त्वज्ञानमत्यावश्यकमितिसिद्धम्। परमेतत् शास्त्रं वैदिकोदाहरणबाहुल्येन वेदानध्येतॄणां जनानां नातीव हृदयङ्गमं भवति योहि स्वशाखां समग्रामधीत्य व्याकरणन्यायादिशास्त्राणि चाधीत्य श्रौतसूत्राणां परिज्ञाता भवेत् सएव याथात्थ्येन शक्नुयात् शास्त्रार्थतत्त्वमाकलयितुमिति तादृशाध्ययनशैल्याः सर्वात्मनेदानीमुत्सन्नत्वेन मीमांसाशास्त्रं सर्वथा विलुप्तप्रायं वर्त्तते इति महदेतत् शोकस्थानम्। परन्तु तत्प्रतिपाद्यस्य सङ्क्षेपेण ज्ञाने जातेऽपि महानुपकारः

स्यादिति सम्भाव्य पूर्वैः पण्डितैः प्रकरणग्रन्थाः प्रणीताः । तेषु-ष्ववरग्रन्थापेक्षया मीमांसापारदृश्वमहामहोपाध्यायश्रीलौगाक्षिभास्क-रविरचितोऽर्थसङ्ग्रहाभिधेयोग्रन्थः सङ्क्षेपेण द्वादशाध्यायार्थप्रतिपाद-कः सरलतया सर्वेषां विद्यार्थिनां हृदयाकर्षकत्वेन विपुलं प्रचारमल-भत । जैमिनीयन्यायमालाऽऽपोदेवीप्रभृतिषु ग्रन्थेषु विस्तरसत्वे-न विचारबाहुल्येन च प्राथमिकानां प्रविविक्षूणां कृते तथा तै-र्ग्रन्थैर्नोपयोगोभवति यथा लघुना सरलेन चानेन । अत एव स-र्वत्रैवास्य ग्रन्थस्य भूयान्पठनपाठने भवतः । परमद्ययावत् शुद्ध-स्य पुस्तकस्यालाभेनाध्येतॄणामन्तेवासिनामध्यापकानां च पठन-पाठनयोः सौकर्यं नाभवत् । काश्यां कलिकातानगर्याञ्च पूर्वं बहु-वारं मुद्रितोसौ ग्रन्थस्तथापि अशुद्ध्यादिदोषरहितमेकमपि पुस्तकं नेतः पूर्वमलभ्यतेति तदर्थं दूयमानमानसानध्यापकाँश्छात्रांश्चाव-लोक्य न्यूनतामेनां परिहर्तुं सञ्जातोत्साहः प्राचीनविविधग्रन्थप्रका-शनधृतव्रतः श्रीजयकृष्णदासगुप्तः ग्रन्थमेनं सम्यग्विशोध्य प्रका-शयितुं मां प्रोत्साहितवान् । तत्प्रोत्साहनेन चाहं प्राचीनादर्शपु-स्तकानि मूलग्रन्थस्य मदीयानि त्रीणि समादाय व्याख्याविरहे विद्यार्थिनां दुरवबोधतादोषो नगच्छेदित्यप्यालोच्य श्रीमत्प-रमहंसपरिव्राजकाचार्यश्रीशिवरामयोगिभिक्षुविरचितकौमुद्याख्य-व्याख्यासहित एवायंग्रन्थोमुद्रणीय इति निश्चित्य काशीस्थसं-स्कृतपाठशालापुस्तकालयस्थं पण्डितवरश्रीविन्ध्येश्वरीप्रसाद-द्विवेदिमहाशयानां साहाय्येन व्याख्यायाः पुस्तकमेकं तथा मदी-ये च द्वे पुस्तके समासाद्य विषमस्थलेषु सुविशदटिप्पण्यादि-भिरलङ्कृत्य मसृणेषु पत्रेषु मनोरमैः सीसकाक्षरैः विबुधजनमनस्तो-षकरेण च प्रयत्नविशेषेण सम्मुद्य ग्रन्थरत्नं प्राकाशयम् । तदत्राने-कधा यत्नपूर्वकं निरीक्ष्य मुद्रणावसरे पत्राणि मुद्रापितोग्रन्थः तथा

पि या अवशिष्टा अशुद्धय स्तासां सूचीपत्रमपि पृथङ्गिर्मितमा-स्ते विषयसूचीपत्रञ्च । यद्यपि साम्प्रतं मुम्बईनगरे सुन्दरैराय-साक्षरैरयं ग्रन्थः सव्याख्योमुद्रितस्तथाऽपि सूक्ष्माक्षरमुद्रितत्वा-त् क्षिपपाठपूर्णो नातीव मनोरमोभवेति न च सर्वात्मना परिशुद्धो-पि न वा टिप्पण्यादिभिरलङ्कृत इति अस्माभिर्मुद्रितोऽयं ग्रन्थ-स्तथाविधन्यूनतारहितः सर्वेषां विपश्चितामन्तेवासिनां च हृदया न-न्दकारको भवेदित्याशास्यते । तथापि मानुष्यसुलभदोषेण सीसकाक्ष रयोजकदोषेण वा स्खलितानि भवेयुस्तर्हि तानि विहाय गुणगृह्या-विपश्चितो गुणानेव ग्रहीष्यन्तीति निभृतमाशासे ।

एतस्मिंश्च कर्मणि कलिकातास्थराजकीयसंस्कृतविद्यालयाध्यापकानां महामहोपाध्यायगुरुवरश्रीलक्ष्मणशास्त्रिमहोदयानां बहुधा साहाय्यं समवाप्य समापयमेतत्कार्यमिति भृशं तेषां कृतज्ञोऽस्मि प्रार्थये च प्रीयतामनेन व्यापारेण सर्वान्तर्यामी स भगवान् जानकीजानिरिति ।

संवत् १९७२
ज्येष्ठकृष्णैकादशी

विदुषा मनुचरः
पं० रघुवीरत्रिवेदी
व्याकरणवेदान्ततीर्थः
श्रीविशुद्धानन्दसरस्वती
विद्यालयाध्यापकः ।
कलकत्ता

सब प्रकार की संस्कृत पुस्तकों के मिलने का पता—


हरिदासगुप्तः
चौखम्बा संस्कृत सीरीज आफीस
बनारस सिटी ।

सव्याख्यार्थसङ्ग्रहस्थशुद्ध्यशुद्धीनां

# सूचीपत्रम् ।

---

| अशुद्धम् | शुद्धम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| कर्थं | कथं | १६ | २२ |
| दनिष्टानु | दनिष्टाननु | ३२ | १३ |
| इतिकर्तव्याका | इतिकर्तव्यताका | ३९ | १५ |
| द्रूजन्य | द्रूयजन्ययो | ४१ | ६ |
| भावार्थस्यैधा | भावार्थस्यैवा | ४३ | १७ |
| प्रामाणा | प्रमाणान्तरेण | ४९ | ३ |
| विधेना | विधेर्नो | ५३ | ७ |
| त्वरूपं | ध्यत्वरूपं | ६७ | १ |
| भिङ्गाक्ष्या | पिङ्गाक्ष्या | ७० | ६ |
| आरुणयस्या | आरुण्यस्या | ७१ | २ |
| पार्ष्टीका | पार्ष्टिका | ७१ | २१ |
| प्रकाशत्व | प्रकाशकत्व | ७३ | १२ |
| मुद्देश्यतग | मुद्देश्यग | ७४ | ८ |
| कपितया | कतिपया | ९० | १ |

| अशुद्धम् | शुद्धम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| प्रयाजाना | प्रयाजानां | ९६ | २ |
| इन्द्राग्नीशे | इन्द्राग्नीरो | १०१ | १७ |
| आग्नीषो | अग्नीषोमी | १२६ | ५ |
| सिद्धिविद्या | सिद्धविद्या | १४४ | १३ |
| शुद्रस्य | शूद्रस्य | १४४ | १५ |
| नाऽघातस्य | नाऽवघातस्य | १५१ | ८ |
| समिधादि | समिदादि | १६१ | ८ |
| क्रमा | क्रमो | १७४ | ४ |
| यदास्वि | यदात्वि | १७४ | १९ |
| चत्वेन | त्वे च न | १७६ | १६ |
| येजामह | येयजामह | १८४ | १२ |
| च नात | चनात् प | १८४ | २० |

॥ श्रीः ॥

# सव्याख्यार्थसङ्ग्रहस्थप्रधानविषयाणां

# सूचीपत्रम् ।

—:०:—

इति सूचीपत्रं समाप्तम् ।

# सङ्ख्याख्यार्थसङ्ग्रहस्थशुद्ध्यशुद्धीनां-

## सूचीपत्रम् ।

—:o:—

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| सर्वाङ्ग्युका- | सर्वाङ्ग्युपका | ५ | ७ |
| तन्त्रस्यत | तन्त्रस्य त | ६ | ६ |
| नात्कर्थ | नात्कथं | १६ | २२ |
| निष्ठामर्थ | निष्ठामन्यामर्थ | २८ | १४ |
| हेतुतत्तया | हेतुतया | २९ | १४ |
| प्रा शस्त्यं | प्राशस्त्यं | ३२ | ११ |
| निष्ठानु | निष्ठानन्तु | ३२ | १३ |
| कर्तव्या | कर्तव्यता | ३९ | १५ |
| द्वजन्य | द्वयजन्य | ४१ | ५ |
| र्थस्यैधा | र्थस्यैवा | ४३ | १७ |
| प्रामा | प्रमा | ४९ | ३ |
| विधेना | विधेर्नो | ५३ | ७ |
| नुष्ठयि | नुष्ठीय | ६२ | २४ |
| योगव | योगव्यव | ६६ | १३ |
| त्वरूपं | ध्यत्वरूपं | ६७ | १ |
| प्रिङ्गाक्ष्या | पिङ्गाक्ष्या | ७० | ५ |
| वद्यागे | वतयागे | ७० | १९ |
| आरुणयस्यापि | आरुण्यस्यापि | ७१ | २ |
| पार्ष्ठीका | पार्ष्ठिका | ७१ | २१ |
| प्रकाशत्व | प्रकाशकत्व | ७३ | १२ |
| तगतत्वे | गतत्वे | ७४ | ८ |
| न्द्रामि | न्द्रामि | ८४ | ८ |
| कपितया | कतिपया | ९० | १ |

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| कावङ्क्षा | काङ्क्षा | ९४ | १८ |
| तत्र हि | तद्धि | ९५ | ४ |
| जानामि | जानां मि | ९६ | २ |
| स्यैन्द्रीग्रो | स्यैन्द्राग्नी | १०१ | १७ |
| साधन्तो | साधन्तौ | १०२ | ११ |
| नियोज्यन्ते | विनियोज्यन्ते | ११० | ५ |
| ग्रहणस्य | ग्रहस्य | १२४ | २ |
| किञ्चिद | किञ्चिद्वृद | १२५ | १७ |
| आग्नी | अग्नी | १२६ | ५ |
| त्याङ्क्य | त्याशङ्क्य | १२६ | १० |
| धनि | धीन | १२७ | २० |
| भवति अग्नी | भवति ( प्रधानप्रत्यासत्तिलाभश्च ) अ | १३१ | ५ |
| निश्चते | निश्चिते | १३३ | ७ |
| सिद्धिवि | सिद्धवि | १४४ | १४ |
| स्नातस्य | स्नानस्य | १४९ | १८ |
| नाऽघात | नाऽवघात | १५१ | ८ |
| समिधादि | समिदादि | १६५ | ८ |
| देत्रत्वं" | देवत्वं" इति | १७१ | ७ |
| प्रक्रमा | पक्रमो | १७४ | ४ |
| यदास्वि | यदात्वि | १७४ | १९ |
| त्वत्वेन | त्वे च न | १७६ | १६ |
| ये जाम | ये यजाम | १८४ | १२ |
| सङ्कोच नात | सङ्कोचनात् प | १८४ | २० |

॥ शुद्धिपत्रं समाप्तम् ॥

श्री-ब्रह्मचारी-हरिदेव-शर्मा

# सटीकार्थसङ्ग्रहः

श्रीगणेशाय नमः ।

वासुदेवं रमाकान्तं नत्वा लौगाक्षिभास्करः ॥
कुरुते जैमिनिनये प्रवेशायार्थसङ्ग्रहम् ॥ १ ॥

---

आद्यो यो हेतुर्विश्वसर्गे महेशो
यज्ञादीनां कोऽहव्यनिक्षेपदेवः ॥
भूतानां भर्ता सर्वभूतान्तरात्मा
हृद्यं मे कार्यं तत्प्रणामः करोतु ॥ १ ॥

श्रीजैमिनिनये ग्रन्थः प्रवेशाय निरूपितः ॥
विदुषा तत्र बालानां कौमुदीयं वितन्यते ॥ २ ॥

इह खलु परमकारुणिकेन मुनिना जैमिनिना धर्माधर्मविवेकाय द्वादशलक्षणी मीमांसा प्रणीता । तत्र हि प्रवेशाय शिशूनामर्थसङ्ग्रहाख्यं प्रकरणं प्रारभमाणो लौगाक्षिभास्करः शिष्टाचारपरिप्राप्तं प्रचयगमनादिफलकमिष्टदेवतानमस्कारलक्षणं मङ्गलमाचरति । वासुदेवमित्यादिना । वासुदेवं श्रीनारायणं सर्वनिवासाधिष्ठानं (१)प्रकाशात्मकं ब्रह्मेत्यर्थः । रमाकान्तं—रमाया लक्ष्म्याः कान्तमित्यर्थः । नचेश्वरानङ्गीकारो, द्रव्यत्यागोद्देश्यविष्णुदेवतायाः स्वीकृतत्वादित्यन्य-

(१) सर्वप्रपञ्चजन्मस्थितिलयोपादानकारणीभूताऽज्ञानविषयं स्वेतराप्रकाश्यत्वे सति प्रकाशरूपमित्यर्थः ।

तु(१)। जैमिनिनय इति । जैमिनिप्रणीते द्वादशाध्यायात्मके पूर्ववेदभागविचारात्मके तन्त्र इत्यर्थः । प्रवेशाय—बालानामिति शेषः । अर्थसङ्ग्रहमिति । अर्थानां—द्वादशाध्यायप्रतिपाद्यप्रमाणादिपदार्थानां सङ्क्षिप्तशब्दरचनया लक्षणादिकथनमित्यर्थः । तत्र हि प्रथमे लक्षणे (२)विध्यादेः प्रामाण्यं निरूपितं, द्वितीये तद्विधेयकर्मभेदो निरूपितः, (३)तृतीये विहितानां शेषशेषिभावः,(४) चतुर्थे क्रतुप्रयुक्तानुष्ठेयानां पुरुषार्थप्रयुक्तानुष्ठेयानां च पदार्थानां परिमाणं चिन्ति-

---

(१) मीमांसकैः प्रौढिवादेनैवेश्वरोनाङ्गीक्रियते लोकानां वेदेष्वेवाऽऽस्थातिशयं जनयितुमितरथा कथं मीमांसकशिरोमणिभिर्वार्तिककारैर्ग्रन्थारम्भे मङ्गलमनुष्ठितमिति सूक्ष्मधियोविदाङ्कुर्वन्तु ।

(२) प्रथमे पादे विधिवाक्यानां साक्षाद्धर्मे प्रामाण्यं द्वितीये पादे विध्येकवाक्यतया प्राशस्त्यद्वाराऽर्थवादानां मन्त्राणां च प्रयोगसमवेतार्थस्मारकतया प्रामाण्यं निरूपितं तृतीये वेदमूलत्वेन स्मृतीनां चतुर्थे नामधेयानां विधेयार्थपरिच्छेदकतया प्रामाण्यमुपपादितमिति समस्तः प्रथमोऽध्यायः प्रमाणलक्षणमिति वर्ण्यते ।

(३) प्रथमे कर्मभेदोपयोगिधात्वर्थापूर्वभावनानां स्वरूपनिरूपणपूर्वकं भेदं निरूप्य गुणप्रधानभावभेदेन कर्मणां भेदं विचार्य ऋगादीनां लक्षणानि प्रसक्तानुप्रसक्तं च चिन्तितम् । द्वितीयेऽध्यायार्थः कर्मभेदः शब्दान्तरादिभिरभिधीयते । तृतीये रथन्तरादीनां कर्मभेदप्रामाण्यापवादः । चतुर्थे नित्यकाम्ययोः प्रयोगयोर्भेदोऽभिहितः ।

(४) प्रथमे श्रुतिः द्वितीये लिङ्गं तृतीये वाक्यप्रकरणादि चतुर्थे निवीतोपवीतादिष्वर्थवादत्वविधित्वादिनिर्णयहेतुः श्रुत्यादेः परस्परविरोधसदसद्भावः । पञ्चमे प्रतिपत्तिकर्माणि । षष्ठे अनारभ्याधीतानि सप्तमे बहुप्रधानोपकारकप्रयाजादि । अष्टमे याजमानान्येतानि निरूपितानि ।

तं, (१)पञ्चमे ऽनुष्ठेयपदार्थानामनुष्ठानक्रमो निरूपितः,(२) षष्ठे विहितकर्मफलभोक्तृत्वरूपाधिकारनिरूपणं,(३) सप्तमे प्रकृतावुपदिष्टाङ्गानां विकृतौ सामान्यातिदेशो निरूपितः,(४)

(१) प्रथमे पादे प्रधानभूतामिक्षा दध्यानयनस्य प्रयोजिका इत्यादिप्रधानप्रयोक्तृत्वं विचारितं द्वितीये वत्सापाकरणमप्रधानं शाखाच्छेदे प्रयोजकमित्याद्यप्रधानप्रयोक्तृत्वं, तृतीये जुहूपर्णमयीत्वादेरपापश्लोकश्रवणादिफलभावाभावचिन्ता । चतुर्थे राजसूयगतजघन्याङ्गाक्षद्यूतादिचिन्ता ।

(२) प्रथमे श्रुत्यर्थपाठादिभिः क्रमोनिरूपितः द्वितीये वाजपेयगतेषु सप्तदशसु पशुष्वेकैकधर्मसमापनमित्यादिक्रमाविशेषः । तृतीये पञ्चप्रयाजादीनामावर्तनेनैकादश्यामित्यादिवृद्धिः अदाभ्यग्रहचित्रिण्योरनावृत्तिरित्यादिवृद्ध्यभावः । चतुर्थे क्रमनियामकानां श्रुत्यर्थपाठादीनां प्रबलदुर्बलभावः ।

(३) कर्माधिकारः कर्तुरस्ति अन्धादेर्नास्ति स्त्रिया अस्ति सच पत्या सह इत्येवमादिना प्रथमेऽधिकारोनिरूपितः द्वितीये सत्राधिकारिणां प्रत्येकं कृत्स्नं फलं दर्शपूर्णमासयोः कर्त्रैक्यनियमः काम्यं कर्म समापनीयमित्येवमादयोऽधिकारिधर्मा उक्ताः । तृतीये द्रव्यस्य प्रतिनिधिरस्ति देवादीनामग्न्यादीनामधिकारिणश्च स नास्ति इत्यादिनिरूपणम् । अवत्तनाशे सत्याज्येन यजेत इडाज्यस्य नाशे सति शेषान्नं ग्राह्यमित्यादिकं पदार्थलोपनं विचारितम् । पञ्चमे कालापराधेन चन्द्रोदये सत्यभ्युदयेष्टिः प्रायश्चित्तं ज्योतिष्टोमस्यैकादयोदीक्षाः द्वादशाहस्य द्वादशदीक्षा इत्यादिनिरूपितम् षष्ठे सत्राधिकारिणस्तुल्यकल्पा एव सत्रं विप्रस्यैव इत्येवमादिकं चिन्तितम् । सप्तमे पित्रादिकं न देयं महाभूमिर्न देया इत्येवमादिर्देयविचारः अष्टमे लौकिकाग्नावुपनयनहोमः स्थपतीष्टिस्तथैव इत्येवमाद्यग्निविचारः ।

(४) प्रथमे समानमितरच्छ्येनेनेत्यादि प्रत्यक्षवचनातिदेशः द्वितीये रथन्तरशब्देन गानमात्राभिधायिना गानस्यैवातिदेश्यत्वमित्येतादृशः पूर्वोक्तातिदेशस्य शेषोविचारितः । तृतीयेऽग्निहोत्रनाम्नाऽतिदेशः । चतुर्थे निर्वापौषधद्रव्यादिलिङ्गातिदेशः ।

अष्टमे "आग्नेयोऽष्टाकपाल" इत्यादिप्रकृत्यङ्गानां "सौर्यं चरुं निर्वपे"दित्यादि विकृतौ सप्तदशद्रव्यदेवतादिद्वारेण विशेषातिदेशः,(१) नवमे प्रकृतावुपदिष्टानां मन्त्रसामसंस्कारकर्मणां विकृतावतिदेशप्राप्तानां प्रकृतिविकृत्योरग्निसूर्यादिदेवतादिभेदे प्रकृतिगतं देवतादिवाचकं पदं विहाय विकृतौ देवतादिवाचकस्य पदस्याध्याहार ऊहो निरूपितः यथाऽ"ग्नये जुष्ट"मिति मन्त्रे प्रकृत्युपदिष्टे विकृतावतिदेशप्राप्ते ऽग्निपदपरित्यागेन सूर्यपदाध्याहारः यथा च "गिरागिरा च दक्षस" इत्यत्र साम्नि गिरापदस्य परित्यागेनैरापदाध्याहारः साम्नामूहः व्रीह्यादिद्रव्यान्तरसम्बन्धिनश्चावघातादेर्नीवारादिद्रव्यान्तरसम्बन्धः संस्कारकर्मणामूहश्च,(२) दशमे विकृतौ चोदकप्राप्तानां प्राकृता-

(१) प्रथमे स्पष्टेन लिङ्गेनातिदेशविशेषः तथ्यथा सौर्यचरावतिदेशकानि निर्वापः तद्धितेन देवतानिर्देशः एकदेवतत्वं औषधद्रव्यकत्वं, इत्यादीनि स्पष्टान्याग्नेयलिङ्गानि द्वितीये त्वस्पष्टैर्लिङ्गैरतिदेशः तद्यथा वाजिने हविःसामान्येन लिङ्गेन पयोविष्यन्तोऽतिदिश्यते तत्र लिङ्गमस्पष्टं शीघ्रं तद्बुद्ध्यनुत्पादनात् । तृतीये प्रबलेन लिङ्गेनातिदेशः तद्यथा आभिचारिकेष्टावाग्नावैष्णवसारस्वतबार्हस्पत्येषु हविःषु त्रित्वेन लिङ्गेन यथाक्रममाग्नेयादिविध्यन्ते प्राप्ते द्विदैवत्यत्वेन लिङ्गेन प्रथम आग्नावैष्णवे तृतीयस्याग्नीषोमीयस्य विध्यन्तोऽतिदिष्टः । प्रबलं च द्विदैवत्यत्वं शब्दोच्चारणमात्रेण सहसा प्रतिभासात् क्रमस्तु विलम्बितप्रतीत्या दुर्बलः । चतुर्थे दर्विहोमेष्वतिदेशोऽपोद्यते ।

(२) प्रथमे उपोद्घातपूर्वकमूहविचारप्रारम्भः तत्र प्रयाजादयो धर्मा अपूर्वप्रयुक्ताः अवघातमन्त्रादिष्वविवक्षितं व्रीह्यग्न्यादिस्वरूपं साधनविशेषत्वमात्रं विवक्षितमित्यादिरुपोद्घातः सवित्रग्निपूषशब्दानां विकृतिषु नास्त्यूहः अग्निशब्दस्यास्त्यूह इत्यादिरूहविचारारम्भः । द्वितीये सपरिकरः सामोहः । तृतीये मन्त्रोहः । चतुर्थे मन्त्रोहप्रसक्षापतितोविचारः ।

ङ्गानां प्रकृतौ सावकाशानां विकृतौ ह्युपदिष्टविशेषाङ्गादिना बाधो निरूपितः—यथा प्रकृतेः सकाशाद्विकृतावतिदिष्टानां बर्हिषां "शरमयं बर्हि"रित्युपदिष्टेन शरमयबर्हिषा विकृतौ बाधः,(१) एकादशे चानेकाङ्गिविधिप्रयुक्तानामङ्गानां सकृदनुष्ठानात्सर्वाङ्गिनामुपकारसाम्यं तन्त्रं निरूपितं,यथाऽऽ"ग्नेयोष्टाकपाल" "उपांशुयाजमन्तरा यज" "त्यग्नीषोमीयमेकादशकपाल"मित्यादिपौर्णमासादिकर्मप्रयुक्तानां प्रयाजाद्यङ्गानां सकृदनुष्ठानात्सर्वाङ्ग्युपकारः(२) द्वादशे चैकाङ्गिप्रयुक्तस्याङ्गानुष्ठानस्य तत्प्रयोजक-

---

(१) प्रथमे बाधहेतुर्द्वारलोपो निरूपितः तद्यथा स्वयंकृता वेदिर्भवति इत्यत्र वेदिनिष्पादनरूपस्य द्वारलोपेन निष्पादकानामुद्धननादीनां बाधः कृष्णलेषु वितुषीकरणरूपस्य द्वारस्य लोपेनावघातस्य बाधः। द्वितीये सङ्क्षेपेणोक्तस्य द्वारलोपस्य बहुभिरुदाहरणैर्विस्तारः। तृतीये बाधकारणं कार्यैकत्वं तद्यथा-प्रकृतौ गवाश्वादिदक्षिणाया ऋत्विक्परिक्रयः कार्यं तथा विकृतिरूपे भूनाम्न्येकाहे धेनुरूपाया दक्षिणायास्तदेव कार्यम्-ततो धेन्वा गवाश्वादिदक्षिणा विकृतौ चोदकप्राप्ता बाध्यते । चतुर्थे नक्षत्रेष्टिविहिता उपहोमाश्चोदकप्राप्तैररिष्टहोमैः सह समुच्चीयन्ते इत्यादिः समुच्चयः । पञ्चमे षोडशिग्रहः प्रकृतिगामी सचाऽऽग्रयणपात्रादेव ग्रहीतव्य इत्यादिर्बाधप्रसङ्गागतोग्रहादिविचारः। षष्ठे साम तृचे गेयमित्यादिर्बाधप्रसङ्गागतः सामविचारः। सप्तमे पश्वङ्गेषु प्रत्यङ्गं हविर्भेदः न कृत्स्नः पशुर्हविर्भेदः गृहमेधीयमपूर्वं कर्मेत्यादिर्बाधप्रसङ्गागतः प्रकीर्णविचारः । अष्टमे नानुयाजेषु इति पर्युदासः न सोमे इत्यर्थवादः नातिरात्रे इति प्रतिषेधः इत्यादिर्बाधोपयुक्तो नञर्थविचारः ॥

(२) प्रथमे तन्त्रस्योपोद्घातो वर्णितः द्वितीये तन्त्रावापौ सङ्क्षेपेणोक्तौ तृतीये तन्त्रमुदाहरणबाहुल्येन प्रपञ्चितं चतुर्थे तथैवाऽऽवापः प्रपञ्चितः।

सामर्थ्यरहितेऽङ्गयन्तरेऽप्युपकारः प्रसङ्गो निरूपितः—यथा "अग्नी-षोमीयं पशुमालभेते"ति पशुविधौ प्रयुक्तानां प्रयाजाद्यङ्गानां पशुपुरोडाशेऽप्युपकार इति(१) । तथा च ते पदार्थाः केचिद-त्रापि संक्षेपेण निरूपिताः केचित्तु सूचिताः । तत्र कांश्चित्पदा-र्थांस्तत्र तत्र प्रदर्शयिष्याम इत्यर्थसङ्ग्रहमित्यस्योपपत्तिः । त-थासति ये चानुबन्धा जैमिनितन्त्रस्यत एवास्यापि, तत्प्रकरणत्वात् तस्य च धर्म एव विषयः अधर्मस्तु निरसनी-यतया विचारितः, सोऽपि । अधिकारी अधीतवेदवेदाङ्गो धर्म-जिज्ञासुः श्रेयोर्थी । प्रयोजनश्च विचारितधर्मानुष्ठानेन स्वर्गादि । सम्बन्धो बोध्यबोधकलक्षणो धर्मतन्त्रयोरिति ॥ १ ॥

तत्र तावत्प्रतिज्ञातमर्थसङ्ग्रहं निरूपयितुं स्वप्रकरणस्य त-न्त्रारम्भाधीनारम्भकत्वात् तन्त्रारम्भार्थकं सूत्रमवतारयति । अथेत्यादिना । तत्र चाथशब्दः सौत्राथशब्दसमानार्थकः । वेदाध्ययनानन्तरं तदर्थविचारः कर्तव्य इति धर्मजिज्ञासां सूत्र-

---

(१) प्रथमे पादे पशुधर्माणां पशुपुरोडाशे प्रसङ्गः सौमिकवेदे-रुत्तरकालीनकर्मसु प्रसङ्ग इत्यादिविचारः द्वितीये सवनीयपशोस्त-न्त्रित्वं नतु सवनीयपुरोडाशानां विकृतिस्तान्त्रिणी न प्रकृतिरन्वार-म्भणीया विकृतिष्वपि स्यात् नतु प्रकृतावेवेत्यादिविचारः । तृतीये त्व-ग्वाससोः समुच्चयः आघारगतानामृजुत्वादीनां समुच्चय इत्यादिकं प्राधान्येन यवव्रीह्योर्विकल्प इत्यादिकं समुच्चयापवादत्वेन इत्युभयं चिन्तितम् । चतुर्थे च ऐन्द्राबार्हस्पत्ययाज्यानुवाक्यायुगलयोर्विक-ल्प इत्यादिकं प्राधान्येन याज्यानुवाक्ययोः समुच्चय इत्यादिकं विकल्पापवादत्वेनेत्युभयं चिन्तितम् । तदेवं द्वादशाध्यायगतेषु षष्टिसङ्ख्याकेषु पादेषु प्रतिपाद्या अर्थाः सङ्गृहीता इत्यादि जैमि-नीयन्यायमालाविस्तरोक्तं सर्वं द्रष्टव्यम् ।

अथ परमकारुणिको भगवान् जैमिनिर्धर्मविवेकाय द्वादशलक्षणीं प्रणिनाय । तत्रादौ धर्मजिज्ञासां सूत्रयामास अथातोधर्मजिज्ञासेति ॥

---

यामासेति तदर्थः । परमकारुणिकः—निरुपधिकरुणायुक्तः । भगवान्—कीर्त्यादिमान् । भगं श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिष्वित्यमरात् । जैमिनिरादौ धर्मजिज्ञासां सूत्रयामासेत्यन्वयः । कस्यादावितिवीक्षायामाह । द्वादशलक्षणीमिति । द्वादशानां लक्षणानामध्यायानां समाहारोद्वादशलक्षणी तां प्रणिनीय बुद्धौ समारोप्य । तत्र—तस्यां तस्या वेत्यर्थः । लोकेपि जनः स्वकृत्यं समाकलय्य तत्करणे प्रवर्तेत इति प्रसिद्धेर्न प्रणिनीय सूत्रयामासेति विरोधः । प्रणिनायेति पाठान्तरे तु प्रणयनं कृतवानित्यर्थः । प्रणिनायेत्युक्ते केन क्रमेणेति वीक्षायां तत्रेत्याद्युत्तरम् । धर्मविवेकायेत्यधर्मस्याप्युपलक्षणं(१) तयोर्विवेकाय निर्णयज्ञानायेत्यर्थः । कुत्र धर्मजिज्ञासां सूत्रयामासेति वीक्षायामाह । अथेति । सूत्रं व्याचष्टे । अत्रेत्यादिना । अत्र—सूत्रे ।

अस्य च प्रथमसूत्रस्य "चोदनालक्षणोऽर्थो धर्मः" इत्यारभ्य "अन्वाहार्ये च दर्शना"दित्यन्तं जैमिनिप्रणीतं धर्मविचारशास्त्रं विषयः । तत्र संशयः—किमस्य धर्मविचारतन्त्र-

(१) सूत्रस्थाऽथशब्दस्य कृत्स्नवेदाध्ययनानन्तर्यार्थकतयाऽतः शब्दोक्तहेतो विवक्षितार्थत्वरूपे सर्वस्यैव वेदभागस्य विवक्षितार्थकत्वस्य कथनीयतया धर्मशब्दस्य वेदार्थमात्रोपलक्षणत्वमिति तात्पर्यम् ।

स्याऽऽरम्भोऽध्ययनविध्यप्रयोज्यस्तत्प्रयोज्योवेति । तत्र यदि स्वाध्यायाध्ययनाविधिनाऽर्थज्ञानाय दृष्टप्रयोजनाय वेदाध्ययनं विधीयेत तदा तस्य शास्त्रारम्भे भवेदपि प्रयोजकत्वं, नैतदस्ति अन्यथासिद्धत्वात् । तथाहि—किमत्यन्ताप्राप्तार्थज्ञानहेतुमध्ययनं तद्विधिर्विधत्ते । किंवा पक्षे प्राप्तमवघातवन्नियमम् । नाद्यः । विवादास्पदं वेदाध्ययनमर्थज्ञानहेतुः अध्ययनत्वाद्भारताद्यध्ययनवदित्यनुमानेनैवाध्ययनस्यार्थज्ञानहेतुत्वप्राप्तेः । नापि द्वितीयः अवघातवैषम्यात्—यथा ऽवघातनिष्पन्नैरेव तण्डुलैरनुष्ठीयमानौ दर्शपूर्णमासावत्रान्तरापूर्वद्वारेण परमापूर्वं जनयतः नान्यथा ततो दर्शपूर्णमासापूर्वमेवावघातनियमहेतुः तथा लिखितपाठेन गुरुपूर्वकाध्ययनेन वाऽर्थज्ञानसम्भवात्पक्षेऽप्राप्ताध्ययननियमहेतुर्वक्तव्यः, स च नास्ति लिखितपाठजन्यार्थज्ञानेनैव क्रत्वनुष्ठानसिद्धेः प्रयोजकाभावात्(१) । तस्मादुक्तविधिद्वयासम्भवादर्थज्ञानहेतुविचारशास्त्रारम्भस्य न विधिप्रयोज्यत्वमिति प्राप्तम् । अत्रोच्यते । यदुक्तमध्ययनस्यार्थज्ञानहेतुत्वमनुमानासिद्धमिति नात्यन्ताप्राप्ताविधिरिति तत्तथैव । नियमाविधिस्तु भवत्येव । नच प्रयोजकाभावः सकलक्रत्वपूर्वस्यैव प्रयोजकत्वात् दर्शपूर्णमासजन्यपरमापूर्वस्यावघातनियमजन्यापूर्वकल्पकत्ववदेव

---

(१) अयं भावः अध्ययनस्य क्रत्वर्थत्वे सति क्रतुजन्यपरमापूर्वं अध्ययनजन्यनियमापूर्वस्य कल्पकं स्यात् तदेव तु नास्ति तथाहि अध्ययनस्य क्रत्वङ्गत्वं किं प्रकरणाद्भवेत् उत श्रुत्यादिभ्यः नाद्यः अध्ययनस्या ऽनारभ्याधीतत्वेन क्रतुप्रकरणाभावात्. नद्वितीयः श्रुत्यादीनामभावात् अतः केवलं स्वर्गफलायाक्षरग्रहणमात्रं विधिर्विधत्ते अश्रुतोऽपि स्वर्गो विश्वजिन्न्यायेन फलं कल्पनीयः ।

अत्राथशब्दोवेदाध्ययनानन्तर्य्यवचनः । अतः शब्दोहि वेदाध्ययनस्य दृष्टार्थत्वं ब्रूते "स्वा-

च क्रतुजन्यापूर्वजातस्य क्रतुज्ञानसाधनाध्ययननियमजन्यापूर्वकल्पकस्य सत्वान्नियमादृष्टस्य कल्पनादर्थज्ञानसाधनयोर्लिखितपाठगुरुपूर्वकाध्ययनयोः पक्षे प्राप्तत्वाद्यदा गुरुपूर्वकाध्ययनं परित्यज्य लिखितपाठादिना ऽर्थज्ञानं सम्पादयितुं व्युत्पन्नः पुरुषः प्रवर्तते तदा नियमादृष्टाय गुरुपूर्वकाध्ययनमेवार्थज्ञानसाधनं विधीयते । क्रतुजन्यापूर्वप्रयुक्तनियमादृष्टस्यास्वीकारे च श्रूयमाणो विधिरनर्थकः स्यात् । नच नानर्थको लिखितपाठगुरुपूर्वकाध्ययनयोरक्षरग्रहणमात्रेण्याविशेषसाधनत्वाद्यदा गुरुपूर्वकाध्ययनं परित्यज्य लिखितपाठेनाक्षरग्रहणाय प्रवर्तते तदा गुरुपूर्वकाध्ययनमेव नियमादृष्टाय विधीयत इति वाच्यम् । तत्फलस्य कल्प्यत्वप्रसङ्गात् । अर्थज्ञानरूपदृष्टप्रयोजनायाध्ययनस्य विधेयत्वे तु नियमादृष्टस्य क्रतुजन्यापूर्वे श्रुतफले ह्युपयोगो भविष्यति । नच "यदृचोऽधीते पयसः कुल्या अस्य पितॄन्स्वधा अभिवहन्ती"त्यार्थवादिकं श्रुतमेव फलमिति वाच्यम् । तस्य नित्यतयाऽध्ययनविधिफलत्वेन प्रथमाध्ययनविधिफलत्वाभावात् । किञ्चाध्ययनव्यापारस्य सम्भवत्यर्थज्ञानरूपदृष्टफलकत्वे केवलादृष्टार्थकत्वानुपपत्तेः । तथाचोक्तम्—

"लभ्यमाने फले दृष्टे नादृष्टपरिकल्पना ॥
विधेस्तु नियमार्थत्वान्नानर्थक्यं भविष्यतीति" ।(१)

---

(१) नन्वेवमपि श्रुतव्याकरणाद्यङ्गस्याधीतवेदस्य पुरुषस्यार्थ-

किञ्च विधिनैव वेदाध्ययनस्य तदर्थज्ञानपर्यवसायित्वं तदर्थनिर्णयहेतुविचारकर्तव्यता चाऽऽक्षिप्यते । तथाहि—"स्वाध्यायोऽध्येतव्य" इत्यत्र तव्यप्रत्ययः शाब्दभावनामभिधत्ते । सा च स्वभाव्यं विना ऽनुपपद्यमाना किञ्चिद्भाव्यं कल्पयति । तत्र चैकप्रत्ययोपात्तत्वेनार्थभावनैव भाव्यत्वेन समन्वेति । सापि स्वभाव्यमन्तरेणानुपपद्यमाना किञ्चिद्भाव्यमाक्षिपति । तत्रापि फलपदस्याश्रवणात्समभिव्याहृतः स्वाध्यायः कर्मभूत एव भाव्यत्वेन सम्बध्यते । तस्य च फलवदर्थावबोधपर्यन्तत्वाभावे भाव्यतानुपपत्त्या फलवदर्थावबोधपर्यवसायित्वमापतति अर्थनिर्णयमन्तरेण च फलवदर्थावबोधस्यासम्भवेनार्थनिर्णयहेतुविचारकर्तव्यतामप्यध्ययनविधिराक्षिपतीति । तस्मादर्थज्ञानरूपदृष्टप्रयोजनायैव वेदमध्ययनं विधीयते नाक्षरग्रहणमात्रायेति(१) सिद्धान्तमभिप्रेत्याथशब्दं वेदाध्ययनानन्तर्यार्थकत्वे-

---

ज्ञानसम्भवाद्विचारशास्त्रस्य वैयर्थ्यमिति चेत् न ज्ञानमात्रसम्भवेऽपि निर्णयस्य विचाराधीनत्वात् अक्ताः शर्करा उपदधातीत्यत्र घृतेनैव न तैलादिना इत्ययं निर्णयो व्याकरणेन निरुक्तेन निगमेन वा न सिद्ध्यति । विचारशास्त्रं तु तेजो वै घृतमिति वाक्यशेषादर्थं निर्णेष्यति, अतो विचारो वैधः ।

(१) यद्यपि स्वाध्यायोऽध्येतव्य इत्यध्ययनविधिर्न किञ्चित्फलवत् कर्मारभ्याम्नातो नाप्यव्यभिचरितक्रतुसम्बन्धपदार्थगतः नहि जुह्वादिवत् स्वाध्यायोऽव्यभिचरितक्रतुसम्बन्धस्तथाऽपि स्वाध्यायस्याध्ययनरूपसंस्कारजनकोऽयं विधिरध्ययनस्य फलसाधनतामवगमयन् किं स्वतन्त्रमश्रुतं किञ्चित्फलं कल्पयित्वा विनियोगभङ्गेन स्वाध्यायेनाधीयीतेत्येवमर्थः कल्प्यतां किं वा परम्परयाऽप्यन्यतोऽपेक्षितमधिगम्य निर्वृणोतीति वीक्षायां न दृष्टद्वारेण परम्परयाऽप्यन्यतोऽपेक्षितप्रतिलम्भे च यथाश्रुतविनियोगोपपत्तौ च सम्भवन्त्यां श्रुतविनियोगभङ्गेनाध्ययनादेवाश्रुतादृष्टफलक-

ध्यायोऽध्येतव्य" इत्यध्ययनविधौ तदध्ययनस्यार्थ-ज्ञानरूपदृष्टार्थकत्वेन व्यवस्थापनात् । तथाच वेदा-ध्ययनानन्तरं यतोऽर्थज्ञानरूपदृष्टार्थकं तदध्ययन-मतोहेतोर्धर्मस्य वेदार्थस्य जिज्ञासा कर्तव्येति शेषः ।

---

नातःशब्दं च वेदाध्ययनस्य वेदार्थज्ञानरूपदृष्टार्थकत्वपरत्वेन च व्याचष्टे । अथ शब्द इत्यादिना । तत्र हेतुमाह । स्वाध्याय इत्यादिना । अध्ययनविधाविति । अध्ययनविध्यनुकूलविचारात्मके प्रमाणलक्षणस्य प्रथमाधिकरण इत्यर्थः । वेदः तच्छब्दार्थः । कर्तव्यपदाध्याहारेण सूत्रं योजयति । तथाचेत्यादिना । तथाचेति । वेदाध्ययनस्य दृष्टार्थत्वे च सतीत्यर्थः । तस्य वेदस्याध्ययनं यतोऽर्थज्ञानरूपदृष्टार्थकमतो हेतोर्वेदाध्ययनानन्तरं वेदार्थस्य धर्मस्येति योजना । तथा च वेदस्य विवक्षितार्थत्वेन वेदार्थज्ञानरूपदृष्टप्रयोजनकस्यैवाध्ययनस्य विधीयमानत्वाद्वेदार्थनिर्णयहेतुविचारः कर्तव्य इत्यध्ययनविधिप्रयुक्तैव शास्त्रमारम्भणीयमिति भावः ।

ननु जिज्ञासा हि ज्ञानेच्छा नच सा कर्तुं शक्यते तस्या व्यापारा-

---

त्पनोचिता । दृष्टश्च स्वाध्यायस्याध्ययनं संस्कारः तेन हि स पुरुषेण प्राप्यते प्राप्तश्चाभ्युदयनिःश्रेयसप्रयोजनमर्थज्ञानमुपजनयति यदा चाध्ययन संस्कृतेन स्वाध्यायेन सम्पाद्यमानोऽर्थावबोधः सफल इति स्थापितं तदा यस्याध्ययनं तस्यैव बोधः सप्रयोजनो नान्यस्य यस्य चोपनयनसंस्कारस्तस्यै वाध्ययनं स चद्विजातीनामेवेत्युपनयना ऽभावेनाध्ययनसंस्काराभावात् पुस्तकादिपठितस्वाध्यायजन्योऽर्थावबोधः शूद्राणां न फलाय कल्पत इति तेषां वैदिककर्मण्यधिकारनिवृत्तिरप्यध्ययनविधिप्रसादलब्धा सिद्धा भवतीति ।

जिज्ञासापदस्य विचारे लक्षणा । अतोधर्मविचारशास्त्र मिदमारम्भणीयमिति शास्त्रारम्भसूत्रार्थः ॥

---

गोचरत्वात्(१) इच्छामात्रेणानुष्ठानोपयोगिधर्मज्ञानासम्भवाच्चेत्यत आह । जिज्ञासापदे चेति । तथाच जिज्ञासेत्यत्र प्रकृत्या ज्ञानमात्रशक्तिमत्याऽनुष्ठानोपयोगिज्ञानमजहल्लक्षणया,प्रत्ययेन च साध्यसाधनभावसम्बन्धेनेच्छासाध्यो विचारो जहल्लक्षणया च बोध्यत इत्यर्थः । समर्थितं शास्त्रारम्भमुपसंहरति । अत इति । स्वाध्यायाध्ययनविधेः शास्त्रारम्भप्रयोजकत्वमतःशब्दार्थः ।

ननु धर्मविचारशास्त्रमारम्भणीयमित्ययुक्तम् विचारविषयधर्मस्यानिरूपणात् तदनिरूपणं च लक्षणप्रमाणाभावात् । लक्षणप्रमाणाभ्यामेव हि वस्तु सिद्धिर्नान्यथा । अतएवोक्तम्—

"मानाधीना मेयसिद्धिर्मानसिद्धिश्च लक्षणादिति" ॥

सजातीयविजातीयवस्त्वन्तरेभ्यः स्वलक्ष्यस्य व्यावर्तको लोकप्रसिद्धः कश्चिदाकारविशेषो लक्षणम् । तेन च लक्षणेन लक्ष्ये सम्भाविते सति ततः प्रमाणेन तदवगच्छति । यथा सास्नादिमती गौरिति गोलक्षणमुपश्रुत्य तेन च लक्ष्यं सम्भाव्य ततः पशुषु तल्लक्षणलक्षितपदार्थमन्विष्येयं गौरिति चक्षुरादिना तदवगच्छति तथा धर्मस्य नास्ति लक्षणमलौकिकत्वात् । नच विहितक्रियात्वं धर्मत्वमिति वाच्यम् । विहितद्रव्यादावव्याप्तिप्रसङ्गात् । नच तस्याऽलक्ष्यत्वं फलार्थं गुणानुष्ठातरि धार्मिकोऽयमिति व्यवहारस्याभावप्रसङ्गात् । नचेष्टापत्तिः । इन्द्रियकामाद्यधिकरणस्य धर्मविचारात्मकत्वाभावेन

---

(१) इच्छाया विषयसौन्दर्यलभ्यत्वेन तत्र कृतिसाध्यत्वासम्भवात् ।

अथ को धर्मः किं तस्य लक्षणमिति चेदुच्यते । यागादिरेव धर्मः तल्लक्षणं वेदप्रतिपाद्यः प्रयोजनवदर्थो धर्म इति । प्रयोजनेऽतिव्याप्तिवारणाय प्रयोजनवदिति । भोजनादावतिव्याप्तिवारणाय वेदप्रतिपाद्य

---

शास्त्रसङ्गत्यभावप्रसङ्गात् । फलार्थं विहितस्य दध्यादिगुणस्य धर्मत्वाभावे तज्जन्यादृष्टस्यापि धर्मत्वासम्भवेन तस्य "धर्मः क्षरति कीर्तना"दिति श्रुतकीर्तननाश्यत्वाभावप्रसङ्गाच्च । नच विहितत्वमात्रं लक्षणमिति वाच्यम् । विवाहार्थमनृतवदनादेरभ्यनुज्ञाविधिविषयस्य धर्मत्वप्रसङ्गादित्यभिप्रायेण चोदयति । अथ क इति । किं यागादिरेव धर्मः किंवा चैत्यवन्दनादिकमपीत्यर्थः । किमिति धर्मलक्षणस्याक्षेपः स च निर्दिष्टः । समाधत्ते । उच्यत इत्यादिना । यागादिरेवेत्येवकारेण चैत्यवन्दनादिधर्मत्वं वारयति । न चैत्यवन्दनादिर्धर्मस्तत्र प्रमाणाभावादित्यर्थः । धर्मस्य लक्षणमाह । तल्लक्षणमिति । प्रयोजन इति । वेदप्रतिपाद्ये स्वर्गादिफलेऽर्थरूप इत्यर्थः । प्रयोजनवदितीति । स्वर्गादिफलस्य सुखादिरूपत्वेन तत्प्रयोजनान्तराभावाद्भवति वारणमिति भावः । भोजनादाविति । तृप्त्यादिप्रयोजनवत्यर्थरूप इत्यर्थः । वेदप्रतिपाद्य इतीति । भोजनादेरागादिनैव प्राप्तत्वात्—

"अष्टौ ग्रासा मुनेर्भक्ष्याः षोडशारण्यवासिनाम् ।
द्वात्रिंशत्तु गृहस्थस्य यथेष्टं ब्रह्मचारिणा"

मित्यादिवचनस्य च ग्रासादिनियमपरत्वाद्भवति तेन त-

इति । अनर्थफलकत्वादनर्थभूते श्येनादावतिव्या-

द्वारणमिति भावः॥ श्येनादाविति । "श्येनेनाभिचरन् यजे-त"त्यादिवेदप्रतिपाद्ये वैरिमरणानुकूलशस्त्रघातादिरूपहिंसात्मकाभिचारस्वरूपप्रयोजनवतीत्यर्थः । नन्वर्थपदस्य श्येनकर्मणि न धर्मलक्षणस्यातिव्याप्तिवारकत्वं श्येनस्यार्थत्वात् । नहि श्येनो नरकं जनयति येनानर्थः स्यान्नरकजनकस्यैवानर्थत्वात् । श्येनस्य तु शत्रुवधमात्रजनकत्वात् । किञ्च चतुर्थे श्येनस्येष्टसाधनत्वेन वेदबोधितत्वाद्धर्मत्वमेवोक्तम् । तत्फलस्यैव हिंसात्मकाभिचारस्य नरकरूपानिष्टजनकत्वेनाधर्मत्वमुक्तम् । नच तत्रैवातिव्याप्तिवारकं भवत्विति साम्प्रतम् । फले विध्ययोगेन तस्य चोदनागम्यत्वाभावात् अन्यथा विधिस्पृष्टे निषेधानवकाशादिति न्यायेन तस्य न हिंस्यादिति निषेधाविषयत्वेन नरकजनकत्वानापत्तिः निषिद्धस्यैव तज्जनकत्वात् तस्मादर्थपदं व्यर्थमेवेत्यत आह । अनर्थफलकत्वादनर्थभूत इति । श्येनफलस्य शत्रुवधस्य नरकजनकत्वेनानर्थत्वाच्छ्येनोऽपि तद्द्वाराऽनर्थ एव तस्यापि शत्रुवधद्वारा नरकजनकत्वादिति भावः । नच चतुर्थविरोधः । तत्र साक्षादिष्टसाधनत्वेन वेदबोधितत्वमात्रमभिप्रेत्य धर्मत्वस्योक्तत्वात्— अन्यथा सौत्रार्थशब्दविरोधापत्तिः व्यावर्त्यान्तराभावात् । नहि व्यवधानेन कार्यजनके जनकत्वव्यवहाराभावः । व्यवधानेनाप्यनुमित्यादिजनके व्याप्त्यादिज्ञाने तद्दर्शनात् । ननु न श्येनस्यानर्थरूपत्वं सम्भवति तस्य चोदनागम्यत्वात् । नच सौत्रार्थशब्दस्य वैयर्थ्यमिति वाच्यम् । तत्फलव्यावर्तकत्वेनाप्युपपत्तेः अन्यथा फलस्य वेदप्रतिपाद्यत्वाभा-

वे तदुद्देशेन यागादिषु प्रवृत्त्यभावप्रसङ्गः इन्द्रियागोचरेऽर्थे प्रमाणान्तराभावात् । तस्माच्छ्येनफलस्यापि वेदप्रतिपाद्यत्वेन शत्रुराज्यादिग्रहणप्रयोजनवत्त्वेन च ग्रन्थकारोक्तधर्मलक्षणलक्षितत्वादर्थपदेन वारणं युक्तमिति चेन्न । चोदनालक्षणोऽर्थो धर्म इति–सौत्रधर्मलक्षणे चोदनापदेन तद्वारणात् । वस्तुतस्तु शत्रुवधरूपाभिचारस्य श्येनफलस्य लोकतः प्राप्तत्वात्तत्र रागतः प्रवृत्तं पुरुषं प्रति श्येनस्य तत्साधनत्वमात्रं वेदेन बोध्यत इति न तस्य वेदप्रतिपाद्यत्वम् । ततश्च तस्य तेनैव वारणेऽर्थपदस्य श्येनवारकत्वेनैव सार्थक्यमिति ध्येयम् । यत्तु श्येनादौ धर्मत्वाभावे तामसधर्मत्वकथनानुपपत्तिरिति तन्न । तस्य तामसत्वकथनेनैवानर्थकत्वोपपत्तेः । प्रसिद्धं हि लोके क्रौर्यादिपुरःसरं तामसक्रियाया अनर्थरूपत्वमित्यलम् । तस्मादर्थत्वे सति प्रयोजनवत्त्वे सति वेदप्रतिपाद्यत्वं धर्मत्वमिति धर्मलक्षणमुपपन्नम् । यत्तु विहितद्रव्यादावव्याप्तिरिति । तन्न । दध्यादेरर्थत्वस्येन्द्रियादिप्रयोजनवत्त्वस्य वेदप्रतिपाद्यत्वस्य च सत्वात् । यत्तु—

"स्त्रीषु धर्मविवाहेषु वृत्त्यर्थे प्राणसङ्कटे ॥
गोब्राह्मणार्थे हिंसायां नानृतं स्याज्जुगुप्सित"

मित्याद्यभ्यनुज्ञाविधिविषयेऽनृतवदनादौ धर्मत्वापत्तिरिति । तदपि न । तत्र निरुक्तस्य धर्मलक्षणस्याप्रत्यभावात् । अभ्यनुज्ञाविधिना हि दोषाभावमात्रस्याक्षेपात्प्रयोजनवत्त्वस्य चानाक्षेपाद्रागप्राप्तप्रयोजनसाधनत्वस्याप्यनृतवदनादेर्वेदबोधितप्रयोजनसाधनताकत्वाभावान्न धर्मत्वापत्तिः । तस्माल्लक्षणे न कोपि दोष इति सिद्धम् । इदमधर्मस्याप्युपलक्षणम् । तस्यापि प्रासाङ्गिकशास्त्रविषयत्वात् । तथाचोक्तम्—"धर्मस्योपक्रान्तत्वेपि यथाप्रसङ्गात्

सिवारणायार्थं इति । न च चोदनालक्षणोऽर्थो धर्म इति सौत्रतल्लक्षणविरोधः चोदनापदस्य विधिरूपवेदैकदेशपरत्वादिति वाच्यम् । तत्रापि चोदनाशब्दस्य वेदमात्रपरत्वात् । वेदस्य सर्वस्य धर्मतात्पर्य-

प्रतिषेधचोदनार्थो निरूपित" इति । तथा खण्डदेवेनाप्युक्तम् "यद्यपि धर्मः क्षरतिकीर्तनादित्यादौ वैशेषिकतन्त्रे च क्रियाजन्यादृष्टे धर्माधर्मशब्दप्रयोगस्तथापि "धर्मः स्वनुष्ठितः पुंसा" मित्यादौ तज्जनकविहितनिषिद्धक्रियादावपि तच्छब्दप्रयोगात् ताविह प्राधान्येन विचार्येत" इति । तथाच वेदबोधितानिष्टसाधनताकत्वमधर्मत्वमित्यधर्मलक्षणं सिद्धम् । अत्रानिष्टसाधनताकत्वं विषभक्षणादेरप्यस्तीति तद्वारणाय वेदेति । ब्रह्मयागादेरपि वेदबोधितत्वमस्तीति तद्वारणायानिष्टेति । एवं धर्मस्य लक्षणमुक्तम् । तत्र च सौत्रचोदनापदपरित्यागेन वेदपदप्रदर्शनं सूत्रविरुद्धमित्याशङ्क्य परिहरति । नचेत्यादिना । नच वाच्यमित्यत्र हेतुमाह । तत्रापीति । तत्रापि—सूत्रेपि । वेदमात्रपरत्वादिति । चोदनाप्रकरणपठितकृत्स्नवेदपरत्वादित्यर्थः । तेन न ब्रह्ममीमांसाविरोधः । नापि सौत्रचोदनापदविरोधः चोदनाशेषार्थवादादेर्वेदस्य स्वप्रकरणपठितस्य तया गृहीतत्वात्प्रकरणान्तरपठितस्य ब्रह्मवाक्यस्य ग्रहीतुमशक्यत्वाच्च । ननु "सोरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वं" "स प्रजापतिरात्मनो वपामुदक्खिद"दित्यादिवाक्यानां धर्मप्रतिपादकत्वादर्शनानात्कथं चोदनापदस्य यागादिधर्मविधायकस्य वेदपरत्वमित्याशङ्क्य विधिशेषस्य स्तुत्यादेः प्रतिपादकत्वेन सर्वस्यापि तादृशवेदवाक्यस्य धर्मतात्पर्यकत्वान्नैवमित्याह । सर्वस्येति ।

वत्वेन धर्मप्रतिपादकत्वात् । स च यागादिर्यजेत

ननु चोदनालक्षणोऽर्थो धर्म इत्यत्र सूत्रेऽर्थत्वे सति चोदनागम्यत्वं धर्मलक्षणं(१)प्रत्यक्षाद्यगोचरेऽपि धर्मे चोदनागम्ये गमकं चोदनावाक्यमेव प्रमाणमिति प्रतीयते, तच्चायुक्तम्, एकस्य सूत्रवाक्यस्य स्वरूपप्रमाणपरत्वे वाक्यभेदप्रसङ्गादितिचेत् ? सूत्रस्यार्थतोधर्मलक्षणत्वेऽपि मुखतः प्रमाणपरत्वात् । तथाचोक्तम् "धर्मलक्षणपरं सूत्रमर्थात्प्रमाणप्रतिज्ञेति प्राभाकराः । मुखतः प्रतिज्ञाऽर्थाद्धर्मलक्षणत्वमिति वार्तिककारीया" इति(२) ।

ननु पूर्वं प्रयोजनवत्त्वमपि धर्मलक्षणे विशेषणं दत्तं ततश्च किं तत्प्रयोजनं किञ्च तदुद्देशेन धर्मविधायकं चोदनावाक्यमिति वीक्षायामाह । स चेत्यादिना । यद्यपि यथा

(१) उक्तमिति शेषः । सूत्रेऽस्त्यवधारणद्वयं चोदनैव लक्षणं प्रमाणं यस्येत्येकं, द्वितीयं चोदना च प्रमाणमेवेति, आद्येनावधारणेन चोदनातिरिक्तानां प्रामाण्यं धर्मे वार्यते द्वितीयेन च चोदनाया अप्रामाण्यकारणानि निराक्रियन्ते तथाचोभयपरत्वे वाक्यभेदः स्पष्ट इति भावः ।

(२) श्रुत्यर्थाभ्यां सूत्रस्योभयपरत्वान्न दोषः सूचनाद्धि सूत्रं तस्यानेकार्थत्वं च दूषणं न भवति अत एवोक्तं "लघूनि सूचितार्थानि स्वल्पाक्षरपदानि च । सर्वतः सारभूतानि सूत्राण्याहुर्मनीषिण" इति । लघूनि–असन्दिग्धार्थानि सांशयिकं हि नानार्थस्फोरकत्वेन गुरु भवति । सूचितार्थत्वे हि मुख्यार्थस्यापरित्यागस्वभावाद्बह्वर्थत्वासिद्धिः । अतएव "स्वल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम् । अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदु"रित्यपि लक्षणं वर्णयन्ति ॥

प्रत्यक्षादीनां धर्मे न प्रामाण्यं तथा चोदनावाक्यस्यापि न तत्र प्रामाण्यं सम्भवति—यतः शक्तिग्रहणपूर्वकं लोके ह्याप्तवाक्यस्य प्रामाण्यं दृष्टम्- शक्तिश्च लोकप्रसिद्धे गवादौ गृह्यते,(१) धर्मस्य चालौकिकत्वात्तत्र शक्तिग्रहणं न सम्भवति, शक्तिग्रहणमन्तरेण च हुंफडादिवच्चोदनावाक्यस्यापि धर्माबोधकत्वान्न तत्र प्रामाण्यं, तथापि प्रभिन्नकमलोदरे मधूनि मधुकरः पिबतीत्यत्र वाक्ये यथा मधुकरपदस्यार्थमजानन् तदन्यपदार्थांश्च जानन् तत्समभिव्याहारात्कमलान्तर्गते मधुपानं कुर्वति दृश्यमाने भ्रमरे मधुकरशब्दस्य सङ्गतिं गृहीत्वा वाक्यार्थं प्रतिपद्यते-"तथा कारीर्या वृष्टिकामो यजेते"त्यादौ लोकप्रसिद्धार्थवृष्ट्यादिपदसमभिव्याहारादलौकिकेपि भावनापदार्थे चोदनायाः सङ्गतिं गृहीत्वा चोदनावाक्यार्थं प्रतिपद्यते इति धर्मबोधकत्वाच्चोदनाया धर्मे नाप्रामाण्यमस्ति । (२)तथा धर्मस्यालौ-

---

(१) प्रमाणान्तरेण प्रत्यक्षादिना गृहीते घटादौ वृद्धव्यवहारादिना घटादिपदस्य शक्तिग्रहणं लोके दृश्यते धर्मस्य तु वेदप्रमाणातिरिक्ताऽगोचरत्वेन कथं तत्र शक्तिग्रहः सम्भवी, वेदेनैव धर्मं ज्ञात्वा तत्र शक्तिग्रहश्चेत्प्राप्तं दुरुत्तरं परस्पराश्रयत्वं धर्मे ज्ञाते तत्र शक्तिग्रहः शक्तिग्रहे जाते वेदस्यावबोधकत्वेन धर्मज्ञानमिति न कथञ्चिदपि वेदाद्धर्मावबोधो भवितुमर्हति इति भावः ।

(२) ननु तथाऽपि संवादाभावादप्रामाण्यमिति चेत् न समनन्तरभाविप्रतिनियतफले वृष्ट्यादौ संवादस्यापि सम्भवात् । अनियतदृष्टफले चित्रायागादौ प्रतिनियतजन्मान्तरफले ज्योतिष्टोमादौ च संवादः कथमिति चेत् ? एवं तर्हि स्वतः प्रामाण्याभ्युपगमान्नास्ति क्वापि संवादाद्यपेक्षा–अप्रामाण्यं हि त्रिविधं अबोधकत्वं विपरीतबोधकत्वं सन्दिग्धार्थबोधकत्वं च तत्रा ऽबोधकत्वं तु वेदस्य शङ्कितुमप्यशक्यं तथा सति शब्दोच्चारणानर्थक्यस्यैव प्रसङ्गात् वेदस्य चेद्बोधकत्वं नास्ति त-

स्वर्गकाम इत्यादिवाक्येन स्वर्गमुद्दिश्य पुरुषं प्रति वि-
धीयते । तथाहि—यजेतेत्यत्रास्त्यंशद्वयं यजिधातुः

---

किकत्वेन प्रमाणान्तरागोचरत्वाद्वेदस्य च तत्र स्वतः प्रामा-
ण्याऽभ्युपगमान्न चोदनाया धर्मबोधने मानान्तरसापेक्षत्वम-
पि । तस्मादप्रामाण्यकारणयोरबोधकत्वसापेक्षत्वयोरसम्भ-
वाच्चोदनायाः सिद्धं स्वतः प्रामाण्यं धर्मे । ततश्च विधायकत्व-
मुपपन्नमित्यभिप्रेत्योक्तं स्वर्गमुद्दिश्य पुरुषं प्रति विधीयत

---

हिं लौकिकस्यापि शब्दस्य बोधकत्वं नास्तीत्येवाभ्युपगन्तव्यं
य एव हि लौकिकास्त एव वैदिका इति हि स्थितिः तथा
सति लोकव्यवहारोच्छेदप्रसङ्गः । न च सृण्येव जर्फरी तुर्फरी
इत्यादिवेदभागेभ्यो न कश्चन अर्थो बुध्यत इत्यस्त्येवाबो-
धकत्वमिति वाच्यम् । किं निगमनिरुक्तव्याकरणादिभिर्व्युत्पन्न-
स्य तदर्थबोधो न भवति उताव्युत्पन्नस्य, तत्र न प्रथमः प-
क्षोऽवकल्पते सर्वेषामेव व्युत्पन्नानां तेभ्यो मन्त्रेभ्योऽर्थावबोध-
दर्शनात्, द्वितीये न वेदप्रामाण्यहानिः नहि अव्युत्पन्नो वेदार्थं
नावबोद्धुं क्षमते इति वेदस्यावबोधकताशक्तिर्नास्ति इति
वदितुं शक्यं तथा चाहुर्निरुक्तकाराः न ह्येष स्थाणोरपराधो
यदेनमन्धो न पश्यतीति । तस्मात्सिद्धमबोधकत्वमप्रामाण्यं ना-
स्तीति । नापि विपरीतबोधकत्वं बोधस्य विपरीतत्वं हि बा-
धकज्ञानविषयविषयकत्वं तच्च यागादिभ्योऽनुष्ठितेभ्यः स्वर्गा-
दिरूपं फलं न संवृत्तमिति ज्ञानं यदि कस्य चिदपि भवेत्तर्हि ज्ञा-
तुं शक्यं तत्तु दुर्घटमेव, वैदिकयागफलानां देहान्तरोपभोग्य-
त्वेन प्रमाणान्तराविषयत्वात् नापि सन्दिग्धार्थबोधकत्वं य-
दाहि परोक्षप्रमाणमात्रस्य सन्दिग्धार्थबोधकत्वं नास्ति तदा
कारणदोषादिरहितस्यापौरुषेयस्य वेदस्य तत्कथं स्यात् अत
एवाह भाष्यकारः कारणदोषबाधकज्ञानयोरभावात्प्रदीपवद्विस्पष्टार्था-
वबोधकत्वाच्च न चोदनायास्त्रिविधमप्यप्रामाण्यमित्यन्यत्रविस्तरः ।

प्रत्ययश्च । प्रत्ययेऽप्यस्त्यंशद्वयमाख्यातत्वं लिङ्त्वं च । तत्राख्यातत्वं दशलकारसाधारणं लिङ्त्वं पुनर्लिङ्मात्रे ।

---

इति । एतेन विध्यादेर्धर्मे प्रामाण्यं प्रथमाध्यायार्थो ध्वनितः । मानसविषयत्वाकारेण स्वर्गं सिद्धवन्निर्दिश्य तत्साधनत्वेनाज्ञातस्य यागस्यानुष्ठेयत्वं प्रतिपाद्यत इति तदर्थः । तथाचोक्तम्—फलस्योद्देश्यत्वं नाम मानसापेक्षोविषयत्वाकार इति ।

ननु यजेत स्वर्गकाम इत्यादौ साधनत्ववाचकशब्दस्याऽदर्शनात्कथं स्वर्गसाधनत्वेन वेदेन यागस्यानुष्ठेयत्वं प्रतिपाद्यत इत्याशङ्क्य प्रकृतिप्रत्यययोर्विभागपुरःसरं प्रत्ययस्यांशविवेकेन भावनाम्प्रतिपादयन् तत्सामर्थ्येन यागस्य स्वर्गसाधनत्वं दर्शयति। तथाहीत्यारभ्याथ क इत्यतःप्राक्तनेन ग्रन्थेन। यद्वा-ननु न यागादीनां स्वर्गसाधनत्वं स्वर्गस्य कालान्तरभावित्वादपूर्वमन्तरेण तन्निष्पादकत्वासम्भवात् । नच यागादीनामपूर्वनिष्पादकत्वं स्यादिति वाच्यम् । सिद्धस्यैव लोके साध्यनिष्पादकत्वदर्शनात्साध्यस्वभावस्य यागदानादिरूपस्य भावार्थस्यापूर्वनिष्पादकत्वासम्भवात् तस्मान्न यागादेः स्वर्गसाधनत्वं ततश्च न तदुद्देशेन यागादिविधिरिति चेन्न । क्रियामन्तरेण द्रव्यादिसिद्धस्यापि लोके फलविशेषसाधनत्वाऽदर्शनात् । नहि पचिक्रियामन्तरेण काष्ठस्थाल्यादीनामोदनसाधनत्वं दृश्यते (१)। माभूत्तर्हि न तावता भवदिष्टसिद्धिरिति

---

(१) तस्मात्सिद्धत्वं न करणत्वे प्रयोजकं यदि नाम सिद्धं वस्तु पुंव्यापारानपेक्षं फलमारभते सर्वदाऽऽरमेतेति साध्यस्यापि करणत्वं भवितुमर्हतीति भावः ।

उभाभ्यामप्यंशाभ्यां भावनैवोच्यते । भावना नाम भवितुर्भवनानुकूलोभावयितुर्व्यापारविशेषः । सा

---

चेन्न । साध्यस्यापि भावार्थस्य यागादेरेकपदोपात्तत्वेन भावनाभाव्यनिर्वृत्तिद्वारेण भावनाकरणस्य स्वसाधनानिष्पादितस्य सतोऽपूर्वद्वारा भावनाभाव्यस्वर्गनिष्पादकत्वादित्यभिप्रायेण भावनां निरूपयितुं विधेर्विधायकत्वप्रकारम्प्रदर्शयितुं च प्रकृत्यादिकं विभजते । तथाहीत्यादिना । तत्रेति । आख्याततत्वलिङ्त्वयोर्मध्य इत्यर्थः । उभाभ्यामिति । आख्याततत्वलिङ्त्वाभ्यामित्यर्थः । भावनैवेत्येवकारेण कर्त्रादिवाचकत्वमाख्यातस्य वारयति । भावनासामान्यं लक्षयति । भवितुरिति । भवितुरुत्पद्यमानस्योत्पत्त्यनुकूलोभावयितुरुत्पादयितुः प्रयोजकस्य व्यापारविशेषो भावनेत्यर्थः । प्रयोजकव्यापारत्वादेव णिजन्तेन भावनाशब्देनोच्यते । यथोत्पद्यमानस्यौदनस्योत्पत्त्यनुकूलो देवदत्तस्य व्यापारविशेषो भावनेत्यर्थः । यथा चोत्पद्यमानाया देवदत्तप्रवृत्तेरुत्पत्त्यनुकूलः प्रवर्तकस्य चैत्रस्याभिप्रायविशेषः—यथा वा यजेत स्वर्गकाम इत्यत्रोत्पद्यमानस्य धात्वर्थस्य स्वर्गस्य वोत्पत्त्यनुकूलः स्वर्गकामस्य व्यापार उत्पद्यमानायाश्च स्वर्गकामप्रवृत्तेरुत्पत्त्यनुकूलो लिङो व्यापारविशेषः । तथाचान्योत्पादनानुकूलो भावकस्य व्यापारविशेषो धात्वर्थादन्यः सर्वधात्वर्थसम्बद्धाकारेण भासमानो भावनासामान्यमिति सिद्धम् । तथाचोक्तम्—

"अन्योत्पादानुकूलात्मा भावना साध्यरूपिणीति" ।

तथाचार्यैरप्युक्तम्—

द्विधा । शाब्दी भावना आर्थी भावना चेति । तत्र पुरुषप्रवृत्त्यनुकूलो भावयितुर्व्यापारविशेषः शाब्दी भावना । सा च लिङ्त्वांशेनोच्यते । लिङ्श्रवणे ऽयं मां प्रवर्तयति मत्प्रवृत्त्यनुकूलव्यापारवानिति नियमेन प्रतीतेः ।

---

"धात्वर्थव्यतिरेकेण यद्यप्येषा न लभ्यते ।
तथापि सर्वसामान्यरूपेणैवाऽवगम्यते" इति ।

भावनां विभजते । सा द्विधेति । तत्र शब्दभावनां लक्षयति । तत्रेति । तत्र—तयोः शब्दभावनार्थभावनयोर्मध्य इत्यर्थः । परिस्पन्दपरिणामविलक्षणः पुरुषप्रवृत्त्यात्मकार्थभावनोत्पत्त्यनुकूलो लिङादिशब्दस्य व्यापारविशेषः शब्दभावनेत्यर्थः । शब्दभावनैव लिङ्त्वादिना लिङाद्यर्थ इत्याह । सा चेति । तस्या लिङाद्यर्थत्वे ऽनुभवं प्रमाणयति । लिङ्श्रवण इति । अनुभवमभिनयति । मदिति । यद्वा—ननु कथमननुभूयमानत्वाल्लिङादिवाच्यत्वम्भावनाया लिङादेः प्रवर्तकत्वेपि तत्र भावनारूपव्यापारस्याननुभवादित्याशङ्क्य तं व्यापारं स्पष्टतयाऽनुभावयति । मदित्यादिना । पुरुषप्रवृत्त्यनुकूलं व्यापारं लिङादिशब्दनिष्ठतयाऽनुभावयित्वा तस्य लिङादिशब्दान्नियमेन प्रतीयमानत्वाल्लिङादिशब्दवाच्यत्वमित्यनुमानप्रदर्शनाय व्याप्तिं दर्शयति । यादित्यादिना । तत्रोदाहरणमाह । यथेत्यादि । सा च शब्दभावना लोके वेदे च प्रवर्तनात्वेनैव लिङादिशब्दवाच्या तत्त्वेनैव च पुरुषप्रवृत्तिहेतुरिति स्वीकर्तव्यम् । अन्यथा प्रैषादेरनेकस्य पुरुषाशयविशेषस्य विधिवाच्यत्वानुपपत्तिः स्यात् आनन्त्यव्यभिचार-

यद्यस्माच्छब्दान्नियमतः प्रतीयते तत्तस्य वाच्यम्—यथा गामानयेत्यस्मिन्वाक्ये गोत्वम् । स च व्या-

---

दोषप्रसङ्गात् । प्रवर्तनात्वञ्च प्रवृत्त्यनुकूलव्यापारत्वम् । अनुकूलत्वञ्च जनकत्वम् । तच्च लोके पुरुषाशयवृत्ति । वेदे तु पुरुषाभावात्पुरुषाशयभिन्नस्यैव कस्य चिल्लिङादिशब्दनिष्ठव्यापारविशेषस्य प्रवर्तनात्वमित्याशयेनाह । स चेत्यादिना ।

अत्रेदम्बोध्यम्—तस्य व्यापारविशेषस्य प्रवृत्तिविषयस्येष्टसाधनत्वानुमानद्वारा प्रवृत्तिजनकत्वमङ्गीकरणीयम् । अन्यथा प्रवृत्तिविषयस्येष्टसाधनत्वानाक्षेपे प्रवृत्त्यनुपपत्तिः स्यात् । तथाचानुमानम्—विमतमिदमिष्टसाधनमयमत्र प्रवर्ततामित्याकारकाऽऽप्तनिष्ठव्यापारविशेषविषयत्वाद्यन्नैवं तन्नैवं यथा प्रतारकवाक्योपस्थितम् । अत्र सुखे सुखं मे जायतामित्युदासीनस्य कस्य चिदिच्छाविषयत्वेपीष्टसाधनत्वाभावात्तत्र व्यभिचारव्यावृत्तये इत्याद्याकारकान्तम् । प्रतारकस्य तादृशेच्छाविषये व्यभिचारवारणायाप्तेति । आप्तत्वञ्च लोकवेदसाधारणं प्रतारणाद्यजन्यहिताहितोपदेशकर्तृत्वे सति तद्भिन्नोपदेशाकर्तृत्वम् । प्रतारणया सर्वदा हिताहितोपदेशकर्तर्यनाप्तेऽतिप्रसङ्गवारणायाजन्यान्तम् । कदाचित्प्रतारणाद्यजन्यतत्कर्तरि तद्दोषवारणायोत्तरदलम् । हितस्योपदेशस्तत्सङ्ग्रहायाहितस्योपदेशश्च तत्परिहाराय बोध्यः । ततश्च तत्कर्तृत्वं लोके पुरुषविशेषे । वेदे च यजेत स्वर्गकामो न कलञ्जम्भक्षयेदित्यादिवाक्ये भवति । तथाच लौकिकवैदिकव्यापारयोर्व्यापारविशेषत्वेन सङ्ग्रहाय हेतौ विशेषपदम् । वैदिकश्च स व्यापारविशेषः प्रवर्तनाप्रेरणाविध्यपरपर्याया

पारविशेषो लौकिकवाक्ये पुरुषनिष्ठोऽभिप्रायविशेषः, वैदिकवाक्ये तु पुरुषाभावाल्लिङादिशब्दनिष्ठ एव । अत एव शाब्दी भावनेति व्यवह्रियते ।

---

भावनैव नञ्रहिते-वाक्ये लिङाद्यर्थः । लौकिकस्तु प्रैषोऽतिसर्गः प्रेरणाऽऽज्ञा याञ्चाऽध्येषणाऽनुज्ञाऽनुमतिरित्यादि बहुविधो भवति । प्रमाणान्तरप्रमितेऽर्थे पुरुषनिष्ठा पुरुषप्रवर्तना प्रैषः । अतिसर्गः कामचारः । उत्कृष्टस्य निकृष्टम्प्रति प्रवर्तना प्रेषणाऽऽज्ञा चोच्यते । निकृष्टस्योत्कृष्टम्प्रति प्रवर्तना याञ्चाऽध्येषणा चोच्यते । समम्प्रति समस्य प्रवर्तनोत्कर्षनिकर्षौदासीन्येन जाताऽनुज्ञाऽनुमतिश्चोच्यते । ते च प्रैषादयो ज्ञानविशेषा इच्छाविशेषा वा चेतनधर्माः पुरुषस्याशयविशेषा एवेत्यभिप्रायेण ग्रन्थकारेणाप्युक्तम् लौकिकवाक्ये पुरुषनिष्ठोऽभिप्रायविशेष इति । तथाच त एव लोके लिङाद्यर्थः । तस्माल्लोके वेदे च व्यापार एव प्रवर्तनाख्यो लिङादिवाच्योऽर्थ इति फलितम् ।

ननु किमत्र वाच्यताख्यशक्यतावच्छेदकं शक्ततावच्छेदकञ्च अन्यथाऽतिप्रसङ्गापत्तेरितिचेत् । अत्रोच्यते—लौकिके हि प्रैषादौ वैदिके च भावनारूपे व्यापारे साधारणं व्यापारत्वमेव पूर्वोक्तप्रवर्तनात्वरूपं शक्यतावच्छेदकमस्ति च लौकिके लिङादिपदोपस्थाप्ये प्रवृत्तिहेतुभूतेष्टसाधनताद्यनुमितिजनके पुरुषाशयविशेषे प्रवृत्तिप्रयोजकव्यापारत्वं, वेदेपि लिङादिशब्दश्रवणात्तदुत्तरकाले यागादिप्रवृतिदर्शनेनेयं देवदत्तस्य यागादिप्रवृत्तिः व्यापाराख्यप्रवर्तनाज्ञानपूर्विका

अन्यप्रेरितप्रवृत्तित्वाच्चैत्राशयज्ञानजन्यमैत्रगवानयनप्रवृत्तिवदि-त्यलौकिकमेव व्यापारमपौरुषेये वेदे इच्छादेर्बाधादनुमाय तत्प्रतीतेर्लिङादिज्ञानान्वयव्यतिरेकानुविधायित्वं तत्र लिङा-दिवाच्यत्वञ्च परिकल्प्य तस्य पूर्वोक्तविधया प्रवृत्तिहेतुभूते-ष्टसाधनताद्यनुमापकतया बालस्तत्रापि प्रवृत्तिप्रयोजकव्यापा-रत्वम्प्रतिपद्यते । कथन्तर्हि लोकेपि व्यापारप्रतिपत्तिरिति चेदित्थम्—उत्तमवृद्धस्य सविधिकवाक्यश्रवणोत्तरकालभाविनीं मध्यमवृद्धस्य गवानयनप्रवृत्तिमुपलभ्य बालो लोकेपि त-त्प्रयोजकव्यापारमनुमिमीते ॥ तथाहि—गवानयनानुकूलोत्त-मवृद्धवाक्यश्रवणोत्तरभाविनी मध्यमवृद्धप्रवृत्तिः—प्रवर्तनाज्ञा-नपूर्विका अन्यप्रेरितप्रवृत्तित्वान्मद्रोदनपूर्वकमदीयभोजनादौ मदभिप्रायजन्यमन्मातृप्रवृत्तिवत् । अत्र स्वतःसिद्धप्रवृत्ताविष्ट-साधनताज्ञानजन्यस्वप्रवृत्तौ च व्यभिचारवारणायान्यप्रेरितेति विशेषणम् । किञ्च प्रवर्तनाज्ञानं उत्तमवृद्धवाक्यजन्यं । तदन्वयव्यतिरेकानुविधायित्वाद्दण्डान्वयव्यतिरेकानुविधायिघट-वत् । किञ्च यस्माच्छब्दाद्यत्प्रतीयते तत्तद्वाच्यं घटपदवाच्यंघ-टत्ववदित्युत्तमवृद्धवाक्यस्य मुग्धाकारां शक्तिं व्यापाराख्यप्र-वर्तनायामवधार्य तत्रचावापोद्वापाभ्यां विधिशक्तिं तस्याम-वधारयति । एवं सर्वत्रोह्यम् । तस्माल्लोकवेदसाधारण्येन व्यापारत्वमेव शक्यतावच्छेदकमिति सिद्धम् । शक्तताव-च्छेदकं तु लिङ्त्वलेट्त्वलोट्त्वादिकम्बोध्यम् ॥ किञ्च यद्यपि निरुक्तविधया व्यापारत्वेनैव सामान्यरूपेण व्यापारज्ञानं तच्च विशेषज्ञानसापेक्षमतिप्रसङ्गवारणाय, तथापि प्रमाणविशेषबोधः सुलभः, यथा घटवद्भूतलमित्यादौ घटपदाद्घटत्वावच्छि-न्नघटमात्रप्रतीतावपि तस्य योग्यसंसर्गेण भूतलादावन्वये बुद्धे

तत्संसर्गस्य तत्त्वेन जिज्ञासायाम्प्रत्यक्षादिप्रमाणान्तरेणैव संयोगत्वादिना संयोगादिरूपसंसर्गप्रतीतिर्भूतलव्याप्तिघटविशेषप्रतीतिश्च भवति—तथा लिङादिपदाद्व्यापारत्वावच्छिन्नव्यापारमात्रस्योपस्थितावपि तस्याख्यातोपात्तार्थभावनाया योग्यसंसर्गेणान्वये बुद्धे पश्चात्तत्संसर्गस्य तत्वेन जिज्ञासायाम्प्रवृत्तिप्रयोजकत्वानुपपत्त्यादिना प्रमाणेनैव विशेषरूपेण संसर्गविशेषप्रतीतिर्यागादिप्रवृत्तिसम्बन्धिव्यापारविशेषप्रतीतिश्च भवति । संसर्गविशेषस्तु तत्तत्प्रवृत्तिप्रागभावकाले यल्लिङादिपदज्ञानन्तेनोत्पादितं यत्प्रेरणाज्ञानं तज्जन्येष्टसाधनताद्यनुमितिप्रयोज्यत्वं—तेन च व्यापारवती यागादिप्रवृत्तिरिति भवति विशेषनिर्णयः । एवं च लोके वेदे च लिङादिश्रवणे प्रैषादिरूपस्य वक्त्रभिप्रायस्य भावनारूपस्य च व्यापारविशेषस्य व्यापारत्वेनैव रूपेण प्रतीतिर्न विशेषरूपेण, तथैव शक्तिग्रहात् । विशेषरूपेण प्रतीतिस्तु लोकेऽजहल्लक्षणयैव । वेदे तु विशेषरूपाकाङ्क्षायाम्प्रैषादिरूपस्य वक्त्राशयविशेषस्यापौरुषेये वेदेऽसम्भवेन लिङादिशब्दनिष्ठ एव प्रेरणापरपर्यायः कश्चिद्व्यापारो विशेषरूप इत्युक्तमेव । तस्मान्निरुक्तव्यापार एव लिङाद्यर्थोऽनिष्टसाधनत्वादिरिति सिद्धम् ।

नन्विष्टसाधनत्वमेव प्रवर्तनात्वेन रूपेण वेदे लिङाद्यर्थ इति मण्डनमिश्रा वदन्ति । अर्थभावनाभिधानानुकूलाया लिङादिनिष्ठशक्तेरेवाभिधाख्यायाः प्रवर्तनात्वेन रूपेण लिङादिवाच्यत्वं परिकल्प्य तज्ज्ञानस्य प्रवृत्तिम्प्रति कारणत्वमात्रं वेदे कल्प्यते इति तु पार्थसारथिर्वदति । लिङादिश्रवणानन्तरम्प्रवृत्तिदर्शनात्प्रवृत्तिसामग्रीजननद्वारा लिङादिज्ञानस्य प्रवृत्तावुपयोग इति तावदविवादम् । तत्सामग्री च कृतिसाध्य-

